प्रवृत्तिः कथं नास्ति ? इति प्रश्नोऽत्रोत्तरम्—उष्णोदकस्य यथा वर्षादौ प्रहरत्रयादिकः कालः प्रोक्तोऽस्ति तथा प्रासुकोदकधावनादीनामपीति बोध्यम् । तेषां प्रवृत्तिस्तु यथासम्भवं विद्यत इति ॥ ८ ॥

तथा—श्राद्धो गुरुमुखे पौषधमुच्चारयति तदा गमनागमने आलोचयति न वा ? इति प्रश्नोऽत्रोत्तरम्—यदि स्वयं पौषधकरणानन्तरं गमनागमने कृते भवतस्तदा गुरुमुखे पौषधकरणावसरे ते आलोचयति नान्यथेति ॥ ९ ॥

इति सकलसूरिपुरन्दरपरमगुरुतपागच्छाधिराजभट्टारकश्री ५ श्रीहीरविजयसूरिप्रसादीकृत–प्रश्नोत्तरसमुच्चये तच्छिष्यपण्डितकीर्तिविजयगणिसमुच्चिते तृतीयः प्रकाशः ॥ ३ ॥

---

## अथ चतुर्थः प्रकाशः ।

अथ जेसलमेरुसङ्घकृतप्रश्नास्तत्प्रतिवचांसि च यथा—

अपक्वफलं बीजकर्षणादनु घटिकाद्वयानन्तरं प्रासुकं भवति न वा ? इति प्रश्नोऽत्रोत्तरम्—अग्निलवणादिप्रबलसंस्कारे प्रासुकं भवति नान्यथेति ॥ १ ॥

तथा—नारकाः पाश्चात्यभवशुभाशुभवार्तां कथं जानन्ति ? इति प्रश्नोऽत्रोत्तरम्—देवताकथनादिना जानन्तीति ॥२॥

तथा—देवद्रव्यभक्षकगृहे जेमनाय गन्तुं कल्पते न वा? इति, गमने वा तज्जेमनक्रयद्रव्यं देवगृहे मोक्तुमुचितं न वा? इति प्रश्नोऽत्रोत्तरम्—देवद्रव्यभक्षकगृहे यदि कदाचित्परवशतया जेमनाय याति तथापि मनसि सशूकत्वं रक्षति न तु निःशूको भवति। जेमनद्रव्यस्य देवगृहे मोचने तु विरोधो भवति ततस्तदाश्रित्य दक्षत्वं विलोक्यते, यथाग्रेऽनर्थवृद्धिर्न भवति तथा करोतीति ॥ ३ ॥

तथा—कल्याणकतपसि क्रियमाणे षष्ठाष्टमकरणस्य शक्त्यभावे पाक्षिकादावाचामाम्लादिकं करोति न वा? इति प्रश्नोऽत्रोत्तरम्—षष्ठाष्टमकरणस्य सर्वथा शक्त्यभावे पाक्षिकादिपर्वतिथावाचामाम्लादिकं करोति। कल्याणकतपःप्रवृत्तिस्तु परम्परया दृश्यत इति ॥ ४ ॥

तथा—प्रत्याख्यानकरणावसरे विकृतिद्वयं येन मुत्कलं रक्षितं भवति तस्य तृतीयविकृतिनिर्विकृतिकं कल्पते न वा? इति प्रश्नोऽत्रोत्तरम्—कारणं विना न कल्पत इति ॥ ५ ॥

तथा—'कयरीपाक' इत्यादिलोकप्रसिद्धानि पाकद्रव्याणि तद्दिवसनिष्पन्नान्यार्द्रशाकप्रत्याख्यानवतां कल्पन्ते न वा? इति प्रश्नोऽत्रोत्तरम्—कल्पन्ते, ईदृशी प्रवृत्तिर्दृश्यत इति ॥ ६ ॥

तथा—मनुष्यक्षेत्राद्बहिश्चन्द्राः सूर्याश्च सन्ति ते तीर्थकृतां जन्मोत्सवे समवसरणे चायान्ति न वा? इति प्रश्नोऽत्रोत्तरम्—तेषां तीर्थकृत्कल्याणकेषु देशनाश्रवणादिकार्ये चात्रागमनप्रतिषेधो ज्ञातो नास्तीति ॥ ७ ॥

तथा—भरतक्षेत्रमध्ये सांप्रतं ये साधवः पञ्चसप्तशतादिक्रोशमध्ये दृश्यन्ते त एव किंवाऽन्येऽपि क्वापि संभवन्ति?

इति प्रश्नोऽत्रोत्तरम्—भरतक्षेत्रमध्ये इदानीन्तनसमये यत्र स्थाने आत्मभिर्ज्ञायन्ते तत्रैव यतयः संभाव्यन्ते नान्यत्रेति। तथाप्यक्षरदर्शनं विनैकान्तेन कथयितुं न शक्यते यदन्यत्र स्थाने यतयो न सन्त्येवेति ॥ ८ ॥

तथा—आचामाम्लमध्ये शुण्ठीमरिचादिकं कल्पते तत्किं कारणेन स्वभावेन वा? इति प्रश्नोऽत्रोत्तरम्—कारणं विनापि कल्पत इति ॥ ९ ॥

तथा—आचामाम्लमध्ये शुण्ठीमरिचादिकं कल्पते, पिप्पलीलवङ्गादिकं च न तत्किं शास्त्राक्षरैः परम्परातो वा? इति प्रश्नोऽत्रोत्तरम्—आचामाम्लमध्ये शुण्ठीमरिचादिकं कल्पते लवङ्गपिप्पलीहारीतकीप्रमुखं पुनर्न कल्पते तत्रैतत्कारणं ज्ञायते यल्लवङ्गेषु दुग्धभक्तं दीयमानमस्ति, हरितकीपिप्पल्यादिकं नालिकातोऽपक्वं सत् शुष्कीक्रियते यथा युगन्धरीगोधूमादिपृथुको राद्धः सन्नाचामाम्लमध्ये न कल्पते। युगन्धरीगोधूमादिकं तु राद्धं सत्कल्पत इति सम्भाव्यते ॥ १० ॥

तथा—केनचिदुपासकेन चत्वार्युपधानान्युद्व्ढानि भवन्ति, तन्मध्ये प्रथमोपधानस्य द्वादशवर्षातिक्रमे प्रथममेवोपधानं पुनरुद्वाह्य स मालां परिदधाति उत चत्वार्यपि? इति प्रश्नोऽत्रोत्तरम्—प्रथमोपधानस्य द्वादशवर्षातिक्रमे पुनस्तस्मिन्नुदूढे माला परिहिता शुध्यति। अथ यदि मनः स्थाने तिष्ठति तदा चत्वार्यपि पुनरुद्वाह्य मालां परिदधातीति ॥११॥

तथा—उपधाने वाह्यमाने तपोदिने यदि कल्याणकतिथिरायाति तदा तेनैवोपवासेन सरति उताऽन्योऽधिकः कृतो विलो-

---

१ क्वचित्पुस्तके—"भरतक्षेत्रमध्ये इदानींतनसमये यथात्मभिर्ज्ञातभूभागे साधवस्सन्ति तथान्यत्रापि सन्तीति शास्त्राद्यनुसारेण ज्ञायते" इत्येवं रूपमुत्तरं समुपलभ्यत इति।

क्यते ? इति प्रश्नोऽत्रोत्तरम्–उपधानतपोदिनान्तः कल्याणकतिथ्यागमने नियन्त्रिततपस्तया तेनैवोपवासेन सरतीति ॥१२॥

तथा—यः श्रावको नियमेन प्रत्यहं प्रतिक्रमणद्वयं कुर्वाणो भवति तस्य कालवेलायां सन्ध्याप्रतिक्रमणविस्मरणे कियतीं रात्रिं यावत्तच्छुध्यति ? इति प्रश्नोऽत्रोत्तरम्—कारणविशेषे विस्मृतौ वा रात्रिप्रहरद्वयं यावत्तत्कर्तुं शुध्यतीति ॥ १३ ॥

तथा—येन शुक्लपञ्चम्युच्चरिता भवति स यदि पर्युषणायां द्वितीयातोऽष्टमं करोति तदैकान्तेन पञ्चम्यामेकाशनकं करोति उत यथारुच्या ? इति प्रश्नोऽत्रोत्तरम्—येन शुक्लपञ्चम्युच्चरिता भवति तेन मुख्यवृत्त्या तृतीयातोऽष्टमः कार्यः । अथ कदाचिद्द्वितीयातः करोति तदा पञ्चम्यामेकाशनकरणप्रतिवन्धो नास्ति, करोति तदा भव्यमिति ॥ १४ ॥

तथा—यदा चतुर्मासकं पूर्णिमायामभूत्तदा प्रतिक्रमणानि पञ्चविंशतिरष्टाविंशतिर्वा वभूवुः ?, तथा तानि शास्त्राक्षरवलेन विधीयमानानि परम्परातो वा ?, शास्त्राक्षरवलेन चेत्तदा तदभिधानं प्रसाद्यमिति प्रश्नोऽत्रोत्तरम्—वर्षमध्ये प्रतिक्रमणानि पञ्चविंशतिरष्टाविंशतिर्वेति क्वापि ज्ञातं नास्ति, शास्त्रमध्ये तु दैवसिकरात्रिकपाक्षिकचातुर्मासिकसांवत्सरिकलक्षणानि पञ्च प्रतिक्रमणानि प्रतिपादितानि सन्तीति ॥ १५ ॥

तथा—मौक्तिकानि सचित्तान्यचित्तानि वा कुत्र वा कथितानि सन्ति ? इति प्रश्नोऽत्रोत्तरम्—मौक्तिकानि विद्धान्यविद्धानि वाऽचित्तानि ज्ञेयानि, यतः श्रीअनुयोगद्वारसूत्रे मौक्तिकरत्नादीन्यचित्तपरिग्रहमध्ये कथितानि सन्तीति ॥ १६ ॥

तथा—सर्वार्थसिद्धविमाने मौक्तिकवलयानि शास्त्रे कथितानि परम्परातो वाऽभिधीयन्ते ?, शास्त्रे चेत् तद् अक्षराणि प्रसाद्यानीति प्रश्नोऽत्रोत्तरम्—सर्वार्थसिद्धविमाने मौक्तिकवलयाक्षराणि च्छुटितगाथासु परम्परायां भुवनभानुकेवलिचरित्रे

च सन्ति, तथा च तद्गाथाः—“तत्थ य महाविमाणे, उवरिमभागम्मि वट्टए एगं । सायररस६४मणमाणं, मुत्ताहलमुज्जलजलोहं ॥१॥ मज्झगयस्स इमस्स य, वलयागारेण ताव सोहंति । चत्तारि मुत्तिआइं, नित्तानल३२मणपमाणाइं ॥२॥ पुणरवि बीए वलए, अड ८ संखाकलिअमुत्तिअकलावो । रिउचंद १६ मणपमाणो, दिप्पइ खजलं व मलमुक्को ॥३॥ चंदकला १६ संखाइं, चंदकलानिम्मलत्तजुत्ताइं । तइए वलए अडमणपमिआइं मुत्तिआणि तओ ॥ ४ ॥ लोअणकिसाणु३२पमिआणि मुत्तिअफलाणि तुरिअवलयम्मि । जलहि४मणसरीराइं, नायबाइं विअट्ठेहिं ॥५॥ वेअरस६४संखया पुण, पंडिअ! मुत्तिअफलाणि जाणाहि । पंचमवलयम्मि तओ, लोअण २ मणभारमाणाइं ॥ ६ ॥ कुंजरलोअणवसुहा १२८ मिआणि मुत्ताहलाणि नेआणि । इगमणभारवहाइं, छट्ठे वलयम्मि वट्टाइं ॥ ७ ॥ मुत्ताहलमंतट्ठिअअणेगवज्जंतवायलहरीहिं । वलयगमुत्तिअनिअरो, समुच्छलिअ आहणेइ जया ॥ ८ ॥ एअं महाविमाणं, महुररवेकंतभायणं जायं । कत्थ वि अन्नत्थ न अत्थि एरिसं सद्दमहुरत्तं ॥ ९ ॥ तत्थ विमाणम्मि सुरा, तन्नायरसेगमोहिअसचित्ता । समयग्गि ३३ सायरमिअं, सुहेण पूरंति निअमाउं” ॥ १० ॥ इति ॥ १७ ॥

तथा—येषां गृहे पुत्रपुत्रीजन्म जातं भवति तद्गृहमनुजाः खरतरपक्षे स्वगृहपानीयेन देवपूजां न कुर्वन्ति, तद्यतिनोऽपि तद्गृहे दश दिनानि यावन्न विहरन्ति, तदक्षराणि कुत्र सन्ति? आत्मपक्षे चैतदाश्रित्य को विधिः? इति प्रश्नोऽत्रोत्तरम्—यद्गृहे पुत्रपुत्रीप्रसवो जातो भवति तद्गृहपानीयेन देवपूजा न शुध्यतीत्यक्षराणि शास्त्रे ज्ञातानि न सन्तीति । तथा तद्गृहविहरणमाश्रित्य यस्मिन् देशे यो लोकव्यवहारस्तदनुसारेण यतिभिः कर्तव्यं दशदिननिर्बन्धस्तु शास्त्रे ज्ञातो नास्तीति॥ १८ ॥

## अथ देवगिरिसङ्घकृतप्रश्नास्तत्प्रतिवचांसि च यथा—

पाक्षिकप्रतिक्रमणे गीतार्थैः क्षामणावसरे "नित्थारपारगा होह" इति कथ्यते तदा श्रावकादिभिरपि किमेतदेव कथनीयम्?, उत "इच्छामो अणुसट्ठिं"? इति प्रश्नोऽत्रोत्तरम्—श्रावकादिभिः "इच्छामो अणुसट्ठिं" इत्येव कथनीयं न तु "नित्थारपारगा होह" इति ॥ १ ॥

तथा—पाक्षिकप्रतिक्रमणपर्यन्ते गीतार्थो यस्य शान्तिकथनादेशं ददाति स श्रावकः दुक्खक्खयकम्मक्खयनिमित्तं काउस्सग्गं चतुर्लोगस्सप्रमाणं कृत्वा प्रकटमेकं च कथयित्वा शान्तिं कथयति, कथनानन्तरं पुनरपि पञ्चदशलोगस्सकाउस्सग्गं विधाय प्रकटमेकं च कथयित्वा पौषधं पारयतीति केचन कथयन्ति । केचिच्च यस्य शान्तिकथनादेशो दत्तो भवति स चतुर्लोगस्समानं काउस्सग्गं कृत्वा प्रकटमेकं च कथयित्वा शान्तिं कथयति पश्चात्पौषधं पारयतीति कथयन्ति । अनयोर्मध्ये यो विधिः प्रमाणं स प्रसाद्य इति प्रश्नोऽत्रोत्तरम्—पाक्षिकप्रतिक्रमणे शान्तेः कथयिताऽग्रतश्चतुर्लोगस्सकाउस्सग्गं कृत्वा प्रकटमेकं च कथयित्वा शान्तिं कथयति, एतावतैव शुध्यति। द्वितीयवारं पञ्चदशलोगस्सकाउस्सग्गकरणे विशेषो ज्ञातो नास्तीति॥२॥

तथा—श्रीमहावीरस्य निर्वाणसमयेऽमावास्यातिथिः स्वातिनक्षत्रं चाभूताम्, दीपालिकासम्बन्धिगुणनसमये च कस्मिंश्चिद्वर्षे ते भवतः कस्मिंश्चिच्च नेति। एतदुपरि केचनेत्थं कथयन्ति यद् यदा स्वात्यमावास्ये भवतस्तदा गुणनीयम्; अन्ये च यस्मिन् दिने 'मेरइयां' इति लोकप्रसिद्धः क्रियाविशेषस्तस्मिन् दिने गुणनीयमिति । तत्र 'मेरइयां' करणे भेदो भवति—एतद्देशमध्ये ये गूर्जरलोकास्सन्ति तैः पाक्षिकदिने तानि कृतानि, एतद्देशीयैस्तु द्वितीयवासरे । ततः किं स्वस्वदेशानुसा-

रेण मेरइयांकरणदिने गुणनीयम् ? उत गूर्जरदेशानुसारेण ? इति प्रश्नोऽत्रोत्तरम्—दीपालिकागुणनमाश्रित्य स्वस्वदेशीयलोका यस्मिन् दिने दीपालिकां कुर्वन्ति तस्मिन् दिने गुणनीयमिति ॥ ३ ॥

तथा—प्रासादे ये केचन यतयः श्राद्धाश्च प्रतिमास्नपनकरणावरे चैत्यवन्दनां न कुर्वन्ति ते चेत्थं कथयन्ति यदवस्थाहेतुना न क्रियत इति, इतरे च भगवतां काऽवस्था ? इति यदा प्रासादे गम्यते तदा चैत्यवन्दना क्रियत इति, तत्र किं प्रमाणम् ? इति प्रश्नोऽत्रोत्तरम्—प्रासादे प्रतिमास्नपनकरणावसरे चैत्यवन्दनकरणप्रतिषेधो ज्ञातो नास्तीति ॥ ४ ॥

## अथ द्वीपबन्दरसङ्घकृतप्रश्नास्तत्प्रतिवचांसि च यथा—

देवगृहमध्ये पौषधिका यदा देवान् वन्दन्ते तदेर्यापथिकीप्रतिक्रमणावसरे उत्तरासङ्गं कृतं विलोक्यते न वा ? इति प्रश्नोऽत्रोत्तरम्—यदा देवगृहमध्ये पौषधिका देवान् वन्दन्ते तदेर्यापथिकीप्रतिक्रमणावसरे उत्तरासङ्गस्य कार्यं दृश्यमानं नास्ति, वृद्धा अपीत्थमेव कथयन्तः श्रुतास्सन्ति । किञ्च ईर्यापथिकी देववन्दनक्रियामध्ये नास्ति, तेन देववन्दनायां क्रियमाणायामन्यदा च देवगृहमध्येऽवस्थितावुत्तरासङ्गं कृतं विलोक्यते, क्रिया तु विधिनैव भवतीति ॥ १ ॥

तथा—प्रभातप्रतिक्रमणसमये प्रथमतः कुसुमिणदुसुमिणउहडावणिअं काउस्सग्गं चतुर्लोगस्समानं करोति तदा "चंदेसु निम्मलयरा" इतियावत् "सागरवरगंभीरा" इतियावद्वा ? इति प्रश्नोऽत्रोत्तरम्—सामान्येन "चंदेसु निम्मलयरा" इतियावत्करोति । यदा पुनः स्वप्ने तुर्यव्रतातिचारो जातो भवति तदा नमस्कारमेकमधिकं चिन्तयतीति ॥ २ ॥

तथा—प्रभातप्रतिक्रमणे प्रथमतः कुसुमिणदुसुमिणकाउस्सग्गं चैत्यवन्दनां च कृत्वा चत्वारि क्षमाश्रमणानि ददाति

ततः स्वाध्यायं करोति ? उत स्वाध्यायं कृत्वा क्षमाश्रमणानि ददाति ? इति प्रश्नोऽत्रोत्तरम्—प्रभातप्रतिक्रमणे प्रथमतश्चतुर्लोगस्समानं काउस्सग्गं चैत्यवन्दनां च कृत्वा चत्वारि क्षमाश्रमणानि दत्त्वा क्षमाश्रमणयुगेन स्वाध्यायं च कृत्वा प्रतिक्रमणं करोति । यत उक्तम्—"इरियाकुसुमिणुसग्गो, जिणमुणिवंदण तहेव सज्झाओ । सव्वस्स वि सक्कथओ, तिन्नि य उस्सग्ग कायव्वा" ॥ १ ॥ एषा गाथा श्रीसोमसुन्दरसूरिकृतसामाचारीमध्ये वर्तते । तथा श्रीविजयदानसूरयोऽपीत्थमेव कृतवन्तस्तच्छिक्षया च वयमपि तथैव कुर्म इति । अथ स्वाध्यायानन्तरं चत्वारि क्षमाश्रमणानि देयानीतिविधिः क्वापि ग्रन्थे वर्तते, तस्यापि प्रतिषेधो नास्ति परं यथा वृद्धाः कृतवन्तस्तथैवेदानीं कुर्म इति ॥ ३ ॥

तथा—उष्णकालादावुष्णं प्रासुकं वा पानीयं पश्चादिप्रहरं यावदचित्तं ततः परं सचित्तं भवतीत्यक्षराणि कुत्र सन्ति ?। तथा तत्र यावत्त्रसजीवोत्पत्तिर्जाता न भवति तावदगालितं तत्पातुं कल्पते न वा ? इति प्रश्नोऽत्रोत्तरम्—उष्णकालादावुष्णं प्रासुकं वा पानीयं पश्चादिप्रहरं यावदचित्तं ततः परं सचित्तं भवतीत्यक्षराणि प्रवचनसारोद्धारसूत्रवृत्तिमध्ये प्रोक्तानि सन्ति । तथा तत्र त्रसजीवोत्पत्तिर्जाता भवतु मा वा तथापि गालितमेव तद्व्यापारणीयं नाऽगालितमिति परम्परा दृश्यत इति ॥ ४ ॥

तथा—पञ्चमीतिथिस्त्रुटिता भवति तदा तत्तपः कस्यां तिथौ क्रियते ?, पूर्णिमायां च त्रुटितायां कुत्र ? इति प्रश्नोऽत्रोत्तरम्—पञ्चमीतिथिस्त्रुटिता भवति तदा तत्तपः पूर्वस्यां तिथौ क्रियते । पूर्णिमायां च त्रुटितायां त्रयोदशीचतुर्दश्योः क्रियते, त्रयोदश्यां विस्मृतौ तु प्रतिपद्यपीति ॥ ५ ॥

तथा—अक्षमालादिका स्थापना या नमस्कारेण विधीयते तदुपर्युद्योते दृष्टिरक्षणं सुकरम्, अन्धकारे च कथं भवति ? तद्विना च स्थापना शुध्यति न वा ? इति प्रश्नोऽत्रोत्तरम्—अक्षमालापुस्तकादिकस्थापना नमस्कारेण स्थाप्यते, स्थापनानन्तरं च क्रियाकरणं यावदुद्योते यथाशक्ति दृष्ट्युपयोगौ रक्ष्येते, अन्धकारे चोपयोगः । दृष्ट्युपयोगयोरन्तरे जाते तु पुनः स्थापनां कृत्वाऽग्रतः क्रिया क्रियते । यतः स्थापना द्वेधा, इत्वरा यावत्कथिका च । तत्रेत्वराऽक्षमालादिका या नमस्कारेण स्वयं स्थापिता सा दृष्ट्युपयोगयोः सतोरेव तिष्ठति । यावत्कथिका चाक्षप्रतिमादिका या गुरुसकाशात्स्थाप्यते, सा पुनः पुनः स्थापिता न विलोक्यत इति ॥ ६ ॥

तथा—मालापरिधाने प्रवेदनकं करोति न वा ? इति प्रश्नोऽत्रोत्तरम्—मालापरिधाने प्रवेदनककरणनियमो ज्ञातो नास्तीति ॥ ७ ॥

तथा—उपधानपूर्णीभवनानन्तरं तपोवासरे उत्तरितुं कल्पते न वा ? इति प्रश्नोऽत्रोत्तरम्—उपधानपूर्णीभवनानन्तरं तपोवासरे नोत्तीर्यते । तथाविधकारणे गीतार्थाऽऽज्ञापूर्वकमुत्तरणे एकान्तेन निषेधो ज्ञातो नास्तीति ॥ ८ ॥

तथा—केचित्पृच्छन्ति नन्दिमण्डनाक्षराणि कुत्र सिद्धान्ते वर्तन्ते ? इति प्रश्नोऽत्रोत्तरम्—नन्दिमण्डनाक्षराण्यनुयोगद्वारवृत्तिसामाचारीप्रमुखग्रन्थेषु वर्तन्ते । तथा परम्परयाऽपि नन्दिर्मण्ड्यमाना ज्ञायत इति ॥ ९ ॥

तथा—पौषधमध्ये सामायिकद्वात्रिंशद्दोषा लगन्ति न वा ? इति प्रश्नोऽत्रोत्तरम्—सामायिकद्वात्रिंशद्दोषाः पौषधमध्ये लगन्तो ज्ञायन्ते ततस्तानुत्सर्गतो न लगयति । कारणे यदि लगयति तदाऽऽलोचयति प्रतिक्रामतीति ॥ १० ॥

तथा—पौषधे शकलातसंस्तारिकं व्यापारयितुं कल्पते न वा? इति, तथा तम्बोलो भक्षयितुं कल्पते न वा? इति, तथा जेमनोपकरणानि कथं गृह्यन्ते? यतस्तत्र मुत्कलानीतं वस्तु कल्पते न वा? इति प्रश्नोऽत्रोत्तरम्—शकलातसंस्तारिकं पौषधमध्ये व्यापारयितुं कल्पते। तथा तम्बोलो लवङ्गकाष्ठादिकः कारणे पौषधमध्ये भक्षयितुं कल्पते। तथा मुत्कलानीतोपकरणानां शुध्यमानतानिषेधो ज्ञातो नास्तीति ॥ ११ ॥

तथा—देवा यदा स्वकीयेतरकल्पे यान्ति तदा तत्रत्यानि चैत्यानि वन्दन्ते न वा? इति प्रश्नोऽत्रोत्तरम्—देवा यदा स्वकीयेतरदेवलोके यान्ति तदा तत्रत्यचैत्यवन्दननिषेधो ज्ञातो नास्तीति ॥ १२ ॥

तथा—जम्बूद्वीपगतमेरोः परितो यथैकविंशत्यधिकैकादशशतयोजनान्यबाधां कृत्वा ज्योतिश्चक्रं भ्राम्यति तथाऽन्यद्वीपगतमेरुभ्योऽपि कियतीमबाधां कृत्वा भ्रमति? इति प्रश्नोऽत्रोत्तरम्—जम्बूद्वीपगतमेरोः परितो यथैकविंशत्यधिकैकादशशतयोजनान्यबाधां कृत्वा ज्योतिश्चक्रं भ्राम्यति तथैवान्यद्वीपगतमेरुभ्योऽपीति सम्भाव्यते, शास्त्राक्षराणि तु व्यक्ततया दृष्टानि न स्मरन्तीति ॥ १३ ॥

तथा—कायोत्सर्गे वन्दनकदानावसरे च स्थापनाचार्यचालनं शुध्यति न वा? इति प्रश्नोऽत्रोत्तरम्—कायोत्सर्गकरणावसरे वन्दनकदानावसरे च स्थापनाचार्यचालनं न शुध्यतीत्येकान्तो ज्ञातो नास्तीति ॥ १४ ॥

तथा—मतान्तरीयस्य कदाचिदुपवासादिप्रत्याख्यानं कार्यते तत्र "पाणस्स" इत्युच्चारणमाश्रित्य किं विधेयम्? यतस्तस्य कसेल्लकादिपानीयपाने कथं तत्पालनं भवति? इति प्रश्नोऽत्रोत्तरम्—मतान्तरीयस्य प्रत्याख्यानकरणे "पाणस्स"

इत्युच्चारणे स यदि कसेल्लकादिपानीयं पिबति तदा प्रत्याख्यानभङ्गो ज्ञातो नास्ति, यतः कसेल्लकक्षेपेऽपि पानीयं प्रासुकं भवति परमात्मनामाचरणा नास्तीति न गृह्यत इति ॥ १५ ॥

तथा—साम्प्रतं क्रियमाणः स्नात्रादिविधिः केन कृतः ? कुत्र वा ग्रन्थे वर्तते ? इति प्रश्नोऽत्रोत्तरम्—साम्प्रतं क्रियमाणः स्नात्रादिविधिः कियान् परम्परया कियांश्च श्राद्धविधिमध्ये कथितोऽस्तीति ॥ १६ ॥

तथा—केवली केवलिसमुद्घातं यदा करोति तदाऽऽत्मप्रदेशैस्त्रसनाडीमेव पूरयति किंवा सम्पूर्णं लोकम् ? इति प्रश्नोऽत्रोत्तरम्—केवली केवलिसमुद्घातं यदा करोति तदा सम्पूर्णं लोकं पूरयतीति ॥ १७ ॥

तथा—चतुर्विंशतिपट्टपञ्चतीर्थीप्रतिमादिषु ऋषभादितीर्थकृतः केनानुक्रमेण गण्यन्ते ?, तथा सूत्रधारसम्बन्धि 'गज' इति प्रसिद्धमानेन भूमिकातः सार्धहस्तोच्चप्रदेशे देवावसरकरणं प्रोक्तमस्ति तदुत्कृष्टकालादावात्माङ्गुलवृद्धिहानिभवने कथं घटते ? इति प्रश्नोऽत्रोत्तरम्—चतुर्विंशतिपट्टपञ्चतीर्थीप्रतिमादिषु ऋषभादितीर्थकृतोऽनेनैवानुक्रमेण गण्यन्त इत्येकान्तो ज्ञातो नास्ति । तथा सूत्रधारसम्बन्धि "गज" इति प्रसिद्धमानानुसारेण भूमिकातः सार्धहस्तोच्चप्रदेशे देवावसरकरणे उत्कृष्टकालादावात्माङ्गुलवृद्धिहानिभवनेऽपि काऽप्यघटमानता नास्ति, यत आत्माङ्गुलवृद्ध्यादौ "गज" इति प्रसिद्धमानमपि तदनुसारेणैव भवतीति ॥ १८ ॥

तथा—उपधानविधिरेकान्तरोपवासैस्तद्वाहनं च कुत्र शास्त्रे केन वा ते कथिते स्तः ? इति प्रश्नोऽत्रोत्तरम्—उपधानविधिरेकान्तरोपवासैस्तद्वाहनं च महानिशीथसामाचारीप्रमुखग्रन्थानुसारेण परम्परानुसारेण च ज्ञातव्ये इति ॥ १९ ॥

तथा—"कयरीपाक" इत्यादिलोकप्रसिद्धद्रव्याण्यासवाश्चाऽऽर्द्रशाकावयवनिष्पन्नतया तत्प्रत्याख्यानवतां कल्पन्ते न वा ? इति प्रश्नोऽत्रोत्तरम्—"कयरीपाक" इत्यादिलोकप्रसिद्धद्रव्याण्यासवाश्चाऽऽर्द्रशाकावयवनिष्पन्नान्यपि तत्प्रत्याख्यानवतां कल्पन्त इति प्रवृत्तिर्दृश्यत इति ॥ २० ॥

तथा—पौषदशमीरात्रौ श्रीपार्श्वनाथजन्मकल्याणकं, तत्र सा रात्रिः किं नवमीदशम्योरन्तरा ?, उत दशम्येकादश्योरन्तरा ? इति; तथा तत् स्नात्रं दशम्यामेकादश्यां वा क्रियते ? इति प्रश्नोऽत्रोत्तरम्—पार्श्वनाथजन्मकल्याणकं दशमीरात्रौ जातमस्ति ततो दशमीदिने स्नात्रं करणीयमिति ॥ २१ ॥

तथा—प्रतिक्रमणे आलोचनानन्तरं "ठाणे कमणे" इत्यादि कथयित्वा गमनागमनालोऽऽचनादेशो मार्ग्यते, तत्र केचित्कथयन्ति न मार्ग्यते, तदाश्रित्य यथा भवति तथा प्रसाद्यम्। तथा केचित्कथयन्ति हस्तशताद् वहिर्गमने गमनागमनालोचनादेशो मार्ग्यते, केचिच्चाप्रमार्जितभूमिगमने इत्येतदाश्रित्यापि यथोचितं प्रसाद्यमिति प्रश्नोऽत्रोत्तरम्—प्रतिक्रमणे आलोचनानन्तरं "ठाणे कमणे" इत्यादि कथयित्वा गमनागमनालोचनादेशो मार्गणीयो ज्ञायते। तथा पौषधमध्ये स्थण्डिलादिकार्ये वहिर्गत्वाऽऽगमानन्तरं गमनागमनाऽऽलोचनं ज्ञायत इति ॥ २२ ॥

तथा—पौषधे उच्चारिते कः सावद्यव्यापारः स्थितो वर्तते यदर्थं सामायिकमुच्चार्यते ?। तथा पौषधे देशावकाशिकं नोच्चार्यते सामायिके चोच्चार्यते तत्र किं प्रयोजनम् ? इति प्रश्नोऽत्रोत्तरम्—पौषधकरणानन्तरं यत् सामायिकमुच्चार्यते तत् सहजापतितं नवमव्रताराधनार्थम्, यत्पुनर्देशावकाशिकं न क्रियते तत्पौषधिको निरवद्यतया गमनादौ प्रवर्तते तेन तत्क-

रणे किं प्रयोजनम्? इति। सामायिकमध्ये देशावकाशिककरणं तु सामायिके द्विघटिकामाने पारितेऽपि ततः परं विरतिकरणार्थमिति ॥ २३ ॥

तथा—द्विदलमाश्रित्य केचिदित्थं वदन्ति—यद्विदलतक्रमुखत्रयसंयोगे तत्र जीवा उत्पद्यन्ते, केचित्तु द्विदलतक्रसंयोगे, इत्येतदुपरि यच्छास्त्रानुसारि भवति तत्प्रसाद्यमिति प्रश्नोऽत्रोत्तरम्—द्विदलमध्येऽपक्वदुग्धदधितक्रसंयोगे जीवा उत्पद्यमाना ज्ञातास्सन्ति शास्त्रानुसारेणापि। मुखसंयोगे तत्र जीवा उत्पद्यन्त इति तु ज्ञातं नास्तीति ॥ २४ ॥

तथा—साधारणप्रासादे प्रतिमायां कार्यमाणायां ग्रामनाम्ना प्रतिमा विलोक्यते?, उत सङ्घराशिनाम्ना? यदि सङ्घराशिनाम्ना तदा सर्वग्रामसङ्घनामेकमेव राशिनाम विद्यते, तेन यथा युक्तं भवति तथा प्रसाद्यमिति प्रश्नोऽत्रोत्तरम्—साधारणप्रासादे प्रतिमायां कार्यमाणायां ग्रामनाम्ना प्रतिमा विलोक्यत इति युक्तं ज्ञायत इति ॥ २५ ॥

तथा—षष्ठव्रतसंक्षेपरूपा प्रत्यहं द्विर्दिग्गमनविरतिर्देशावकाशिकाख्ये दशमव्रते, चतुर्दशनियमास्तु भोगोपभोगविरमणाख्ये सप्तमव्रते, तत्कथं देशावकाशिककरणेनैव ते उच्चार्यन्ते? इति प्रश्नोऽत्रोत्तरम्—देशावकाशिकं द्वेधा, एकं षष्ठव्रतसंक्षेपरूपम्, प्रतिदिनदिग्विरतिरूपम्, द्वितीयं सर्वव्रतसंक्षेपरूपं क्रियमाणमस्तीति न कापि विप्रतिपत्तिरिति ॥ २६ ॥

तथा—उपधानवाचना नमस्कारं विना दीयते उत तत्पूर्विका? इति प्रश्नोऽत्रोत्तरम्—उपधानवाचनां श्रीविजयदानसूरयो नमस्कारं विनैव दत्तवन्तो वयमपि तथैव दद्म इति ॥ २७ ॥

तथा—[1]उपधानवाचना पारणादिने उत तपोदिने? तथा उपधानवाचना प्रातः सन्ध्यायां वा दीयते? इति प्रश्नोऽत्रो-

---

१ "उपधानवाचना पारणादिने दीयते न वा? तथा उ-" इत्यपि पाठः।

त्तरम्—उपधानवाचना तपोवासरे पारणादिने वा दत्ता शुध्यति। तथोपधानवाचनाऽऽचामाम्लैकाशनककरणानन्तरं सन्ध्यायामपि दत्ता शुध्यति परं प्रतिदिनक्रियमाणसन्ध्यासमयक्रिया पश्चात्क्रियते ॥ २८ ॥

तथा—चतुर्मासकमध्ये मालारोपणनन्दिः कुतः प्रभृति विधीयते? इति प्रश्नोऽत्रोत्तरम्—चतुर्मासकमध्ये तुर्यव्रत-मालारोपणनन्दी विजयदशम्यनन्तरं भवतः। द्वादशव्रतनन्दी त्वर्वागपि भवन्ती दृश्यत इति ॥ २९ ॥

तथा—उपधानमध्ये आर्द्रशाकभक्षणं कल्पते न वा? तथा विलेपनमस्तकतैलप्रक्षेपादिकं कल्पते न वा? इति प्रश्नोऽत्रोत्तरम्—उपधानमध्ये सांप्रतमार्द्रशाकभक्षणरीतिर्नास्ति। तथा विलेपनमस्तकतैलक्षेपादिकं यतिवत्स्वयं न वाञ्छति, अन्यः कश्चिद्यदि भक्तिं करोति तदा निषेधो ज्ञातो नास्तीति ॥ ३० ॥

तथा—श्रावकश्राविकाणां नन्दीसूत्रश्रावणं "नाणं पंचविहं पन्नत्तं" इत्यादिरूपं नमस्कारत्रयरूपं वा क्रियते? इति प्रश्नोऽत्रोत्तरम्—श्रावकश्राविकाणां नन्दीसूत्रं नमस्कारत्रयरूपं श्राव्यत इति ॥ ३१ ॥

तथा—उपधानवाचनां श्राद्धाः श्राद्धश्चोर्ध्वस्थानेन गृह्णन्ति उपविश्य वा? इति प्रश्नोऽत्रोत्तरम्—उपधानवाचनां श्राद्ध्य ऊर्ध्वस्थिताः शृण्वन्ति, श्राद्धास्तु चैत्यवन्दनमुद्रयेति ॥ ३२ ॥

तथा—पौपधिकः श्राद्धो वस्त्रेण मस्तकं बन्धयित्वा देवगृहमध्ये गत्वा देववन्दनं करोति न वा? इति प्रश्नोऽत्रोत्तरम्—पौपधिकश्राद्धस्य मुख्यवृत्त्या मस्तकबन्धनाधिकारो नास्ति, कारणे पुनः "फालीउं" इतिप्रसिद्धवस्त्रेण बन्धने देवगृहमध्ये देववन्दनादिक्रियायां क्रियमाणायां छोटितं विलोक्यते। अन्यो विशेषो ज्ञातो नास्तीति ॥ ३३ ॥

तथा—सांवत्सरिकपाक्षिकाष्टमीज्ञानपञ्चमीरोहिणीतपांसि येन यावज्जीवमुच्चारितानि भवन्ति स रोहिण्या अग्रतः पृष्ठतो वाऽऽगमने षष्ठकरणशक्त्यभावे किं करोति? इति प्रश्नोऽत्रोत्तरम्—सर्वथा षष्ठकरणशक्त्यभावे यत्तपः प्रथममागच्छति तत्तपः प्रथमं करोति, स्थितं तु पश्चात्कृत्वा प्रापयतीति ॥ ३४ ॥

तथा—श्राद्धानामेकादशाङ्गेषु श्राव्यमाणेषु नन्दिर्मण्डिता विलोक्यते न वा? इति प्रश्नोऽत्रोत्तरम्—श्राद्धानामेकादशाङ्गश्रावणे नन्दिमण्डनाधिकारो ज्ञातो नास्तीति ॥ ३५ ॥

तथा—अन्यतीर्थीयः कश्चिद्यदि तुर्यव्रतमुच्चारयति तदा किं नन्दिं विनाऽप्युच्चार्यते? उत नन्दिसहितमेव? इति प्रश्नोऽत्रोत्तरम्—अन्यतीर्थीयः कश्चित् तुर्यव्रतमुच्चारयति तदा नन्दिं विनाऽप्युच्चार्यते, तदाश्रित्य निषेधः कोऽपि ज्ञातो नास्तीति ॥ ३६ ॥

तथा—पौषधिकः श्राद्धो यद्याहारं गृह्णाति तदा तस्य जेमनानन्तरं चैत्यवन्दनाकरणमन्तरा पानीयं पातुं शुध्यति न वा?, तथा स्वाभाविक उपधानवाहकश्चाहारग्राहकपौषधिकः सन्ध्यासमयप्रतिलेखनां केनानुक्रमेण करोति? इति प्रश्नोऽत्रोत्तरम्—पौषधिकश्राद्धस्याहारग्रहणानन्तरं चैत्यवन्दनायां कृतायामेव पानीयं पातुं शुध्यति नान्यथा, यतः पौषधमध्ये श्राद्धस्यापि बह्वी क्रियारीतिर्यतिवदेव वर्तते। तथाऽऽहारग्राहकपौषधिकः सन्ध्यासमये प्रतिलेखनामुखवस्त्रिकां प्रतिलिख्य परिधानांशुकं परावृत्य "पडिलेहणा पडिलेहावो" इत्यादेशं मार्गयित्वा तत्कृत्यं विधाय उपधिमुखपटीं प्रतिलिख्य स्वाध्यायं कृत्वा वन्दनकद्वयं दत्त्वा प्रत्याख्यानं कृत्वा "उपधि संदिसावुं, उपधि पडिलेहुं" इत्यादेशद्विकं क्षमाश्रमणद्वि-

केन मार्गयतीति सामाचारी वर्तते । उपधानपौषधिकस्याऽयं विशेषः—यत्पानीयसारणानन्तरं गुरुपार्श्वे स्थापनाचार्यपार्श्वे या मुखवस्त्रिकां प्रतिलिख्य वन्दनकद्वयं दत्त्वा च प्रत्याख्यानं करोति, न पुनः प्रतिलेखनासमये वन्दनकदानप्रत्याख्याने करोति । अन्यदन्तरं तु ज्ञातं नास्तीति ॥ ३७ ॥

तथा—रात्रिपौपधिकः प्रस्रवणोच्चारभूम्योः कति मण्डलकानि करोति ? इति प्रश्नोऽत्रोत्तरम्—रात्रिपौपधिकः प्रस्रवणोच्चारपरिष्ठापनभूम्योश्चतुर्विंशतिमण्डलकानि करोति । द्वादश मध्ये द्वादश बहिश्च, "वारस वारस तिन्नि अ" इति वचनादिति ॥ ३८ ॥

तथा—यः सन्ध्यायां रात्रिपौपधं करोति स तदुच्चारणानन्तरं पानीयं पिवति न वा ? इति प्रश्नोऽत्रोत्तरम्—यः सन्ध्यायां रात्रिपौपधं करोति तस्याऽऽहारपौपधः सर्वत एवोच्चार्यते न देशतस्तेन दिवसपौषधो भवतु मा वा परं रात्रिपौपधकरणानन्तरं स पानीयं न पिवतीति ॥ ३९ ॥

तथा—त्रिविधाहारप्रत्याख्याननिर्विकृतिकैकाशनकद्व्यासनकेषु कृतेष्वार्द्रशाकभक्षणं शुध्यति न वा ? इति प्रश्नोऽत्रोत्तरम्—निर्विकृत्यादिषु त्रिविधाहारप्रत्याख्यानेष्वेकान्तेनार्द्रशाकभक्षणनिषेधो ज्ञातो नास्ति, संवरार्थं न गृह्णाति तदा वरमिति ॥ ४० ॥

तथा—दिवसपौपधिकः सन्ध्यासमयप्रतिलेखनां कृत्वा यदि रात्रिपौपधं करोति तदा किं प्रतिलेखनादेशान् पुनरपि मार्गयति ? उत प्राग्मार्गितैरेव तैः शुध्यति ? इति प्रश्नोऽत्रोत्तरम्—प्रतिलेखनादेशाः पुनर्मार्गिता न विलोक्यन्त इति ॥४१॥

तथा—एकाशनकसहितनिर्विकृतिकप्रत्याख्यानैकाशनकप्रत्याख्यानयोरुच्चारे किमन्तरम्? इति प्रश्नोऽत्रोत्तरम्—निर्विकृतिकैकाशनकप्रत्याख्यानयोरेतावदेवान्तरमस्ति यन्निर्विकृतिकप्रत्याख्याने "निव्विगइयं पच्चक्खामि" इति उच्चार्यते, एकाशनकप्रत्याख्याने तु "विगइयं पच्चक्खामि" इति । अन्यत्सर्वं सदृशमस्ति । तथैतदप्यन्तरमस्ति—यन्निर्विकृतिकप्रत्याख्यानं त्रिविधाहारचतुर्विधाहाररूपं भवति, एकाशनकप्रत्याख्यानं तु द्विविधाहाररूपमपीति ॥ ४२ ॥

तथा—पौषधसामायिकयोर्ग्रहणानन्तरं तयोः पारणकालेऽप्राप्ते ग्राहकशरीरे क्लामनायां किं विधेयम्? इति प्रश्नोऽत्रोत्तरम्—पौषधसामायिकयोः पारणकालेऽप्राप्ते यदि ग्राहकस्य शरीरक्लामना भवति तदा स वेलाप्राप्त्यनन्तरं सावधानताभवने यथाशक्ति तत्पारणाचारं सत्यापयति, यदि ग्राहकः सावधानो न भवति तदा समीपस्था अन्ये वेलायां प्राप्तायां पारणविधिं श्रावयन्ति, यावच्च न श्रावितस्तावन्महतीं विराधनां कर्तुं न ददतीति सम्भाव्यत इति ॥ ४३ ॥

तथा—आरात्रिकमङ्गलप्रदीपः सृष्ट्या संहारेण वोत्तार्यते? तदुत्तारणपाठश्च कः? इति प्रश्नोऽत्रोत्तरम्—जिनप्रतिमाऽग्रे आरात्रिकमङ्गलप्रदीपः सृष्ट्योत्तार्यते न तु संहारेण । पूर्वाचार्यप्रणीतग्रन्थमध्ये क्वापि संहारोत्तारणस्याप्यक्षराणि सन्ति परमिदानीं श्राद्धविधिजिनप्रभसूरिकृतपूजाप्रकरणयोः सृष्ट्यैवोत्तारणमुक्तमस्ति तेन तथैव क्रियते । तदुत्तारणगाथा च—"मरगयमणिघडियविसालथालमाणिक्कमंडियपईवो । ण्हवणपरकरुक्खित्तो भमिउ जिणारत्तियं तुम्हं" ॥ १ ॥ इति ॥ ४४ ॥

तथा—श्राद्धानां यद्येकादशाङ्गानि श्राव्यन्ते तदा किं प्रथमचतुर्थयोरेव प्रहरयोः? उत द्वितीयतृतीययोरपि? इति प्रश्नोऽत्रोत्तरम्—श्राद्धानामेकादशाङ्गानि केवलानि सूत्रतः श्राव्यन्ते तदा प्रथमचतुर्थयोः प्रहरयोः श्रावितानि शुध्यन्ति । अर्थसहितानि तु द्वितीयतृतीययोरपीति ॥ ४५ ॥

अथ डुङ्गरपुरसङ्घकृतप्रश्नास्तत्प्रतिवचांसि च यथा—

मतसद्ग्रमेदपूजायामष्टमङ्गलस्थालभरणे पूजानन्तरं तदपनयने तदन्तर्गतमत्स्ययुगलाकारस्यापि भङ्गे पातकं भवति न वा? इति प्रश्नोऽत्रोत्तरम्—अष्टमङ्गलमध्ये मत्स्याकारस्य विधानं शास्त्रानुसारितया युक्तमेव वर्तते। पूजानन्तरं तदपनयनमपि युक्तमेव प्रतिभासते। तथा यो मन्यते तस्य युक्तिरपि तत्रेदृशी वर्तते, तथाहि—इन्द्रो यदा जिनजन्मोत्सवं कर्तुं समायाति तदा पूर्वं भगवज्जन्मगृहे आगत्य मातुः पार्श्वाद्भगवन्तं गृहीत्वा तत्प्रतिबिम्बं च तत्र मुक्त्वा मेरौ गत्वा जन्माभिषेकं च कृत्वा पुनरपि तत्राऽऽगत्य मातुः पार्श्वे भगवन्तं मुक्त्वा प्रतिबिम्बं विसर्जयति। तथा नवीनपित्तलादिप्रतिमायां क्रियमाणायां प्रथमं मदनाकारं विधायोपरि मृत्तिकां दत्त्वा मदनं मध्यतो गालयित्वा कृपति। अत्र पूर्वत्र च हिंसापरिणामं विना यथा पातकं न भवति तथा मत्स्ययुगलापनयनेऽपि ज्ञेयमिति ॥ १ ॥

तथा—जिनप्रतिमानां तान्येवाभरणानि प्रतिदिनं परिधाप्यन्ते, अथ तेषां निर्माल्यता कथं न भवति? इति प्रश्नोऽत्रोत्तरम्—एतदाश्रित्य शास्त्रमध्ये एवं कथितमस्ति यद् "भोगविनष्टं द्रव्यं निर्माल्यम्" इति। तेनाऽऽभरणानां भोगविनष्टत्वाभावेन निर्माल्यता न भवतीति ज्ञेयमिति ॥ २ ॥

तथा—विष्णुकुमारसम्बन्धः कुत्र ग्रन्थे वर्तते?, तथा तेन यल्लक्षयोजनप्रमाणं रूपं कृतं श्रूयते तत्किमुत्सेधाङ्गुलनिष्पन्नेन योजनेन प्रमाणाङ्गुलनिष्पन्नेन वा?, तथा तेन पूर्वपश्चिमसमुद्रयोः पादौ मुक्तौ स्त इत्यप्युक्तमस्ति, तेनैतदाश्रित्य यथा घटमानं भवति तथा प्रसाद्यमिति प्रश्नोऽत्रोत्तरम्—विष्णुकुमारसंबन्ध उत्तराध्ययनवृत्त्युपदेशमाला-

वृत्तिप्रमुखग्रन्थेषु वर्तते । तथा तेन यल्लक्षयोजनप्रमाणं रूपं कृतं वर्तते तदुत्सेधाङ्गुलनिष्पन्नयोजनप्रमाणेन । यत्पुनः पूर्वपश्चिमसमुद्रयोः पादौ मुक्तौ तज्जम्बूद्वीपमध्यस्थलवणसमुद्रखातिकायामिति सम्भाव्यते, अन्यथोत्सेधाङ्गुलनिष्पन्नलक्षयोजनप्रमाणशरीरस्य तस्य चरणाभ्यां पूर्वपश्चिमलवणसमुद्रस्पर्शनं दुःशकमिति ॥ ३ ॥

## अथ सिद्धपुरसङ्घकृतप्रश्नास्तत्प्रतिवचांसि च यथा—

प्रतिवासुदेवे गर्भावतीर्णे तन्माता कियतः स्वप्नान् पश्यति? इति प्रश्नोऽत्रोत्तरम्—त्रीन् स्वप्नान् पश्यतीति ज्ञायते सप्ततिशतस्थानकशान्तिचरित्राद्यनुसारेणेति ॥ १ ॥

तथा—तद्दिनतलितपक्वान्नं कटाहविकृतिप्रत्याख्यानवतः कल्पते न वा? इति प्रश्नोऽत्रोत्तरम्—तद्दिनतलितपक्वान्नं कटाहविकृतिप्रत्याख्यानवतः प्रत्याख्यानकरणसमये यदि मुत्कलं रक्षितं भवति तदा कल्पते नान्यथेति परम्परा दृश्यत इति ॥२॥

तथा—चतुर्मासकमध्ये सार्धद्विगव्यूतप्रमाणनदीमुत्तीर्याऽऽहारग्रहणार्थमिव वन्दनार्थं क्षामणार्थं वा गम्यते न वा? इति प्रश्नोऽत्रोत्तरम्—चतुर्मासकमध्ये सार्धद्विगव्यूतप्रमाणनदीमुत्तीर्य भिक्षाग्रहणार्थमिवैकं पादं जले कृत्वैकं पादं स्थले कृत्वा यदि वन्दनार्थं क्षामणार्थं वा व्रजति तदा शास्त्रानुसारेणैकान्तिको निषेधो नास्ति, परमिदानीं प्रवृत्तिर्न दृश्यत इति ॥ ३ ॥

## अथ धायताग्रामसत्कसङ्घकृतप्रश्नास्तत्प्रतिवचांसि च यथा—

द्वयोः श्राद्धयोः प्रतिक्रमणकरणसमयेऽथवा सामायिके कृते सत्येकस्य हस्तादपरेण चरवलके पातिते उभयोर्मध्ये कस्येर्यापथिकी समायाति? किमुभावपि प्रतिक्रामत एको वा? इति प्रश्नोऽत्रोत्तरम्—द्वयोः श्राद्धयोः प्रतिक्रमणकरणादौ

सावधानतयैकेन चरवलको गृहीतो भवति, अथ यदि द्वितीयहस्तलगनेन हेतुना पतति तदा तस्येर्यापथिकी समायाति । यदि च गृहीतोऽप्यसावधानतयैव तदोभयोरपीर्यापथिकी समायातीति ॥ १ ॥

तथा—यः शुद्धक्रियां कुर्वाणः शुद्धाचारं च पालयन्नीर्यापथिकीमागतां न जानाति स कियद्भिर्मुहूर्तैस्तां प्रतिक्रामति ? इति प्रश्नोऽत्रोत्तरम्—शुद्धक्रियायां क्रियमाणायां सोपयोगतया प्रमार्जनादिविधिनोपवेशनादिष्वीर्यापथिकी नायाति, यतस्तामाश्रित्य कालमानमुक्तं ज्ञातं नास्ति । तथापि क्रियान्तरे क्रियमाणे ईर्यापथिकी प्रतिक्रम्यते, यतो महत्यां वेलायां मनोवचःकायोपयोगानां सम्यगवबोधो न भवतीति ॥ २ ॥

तथा—अष्टापदपर्वते भरतचक्रवर्तिकारिताः सिंहनिषद्याप्रमुखप्रासादास्तद्गतबिम्बानि चाद्ययावत्कथं स्थितानि सन्ति ?, तथा शत्रुञ्जयपर्वतेऽपि भरतकारितान्येव प्रासादबिम्बानि कथं न स्थितानि ? यतस्तत्रासङ्ख्याता उद्धारा जाताः श्रूयन्ते, तेनाष्टापदे कस्य सान्निध्यम् ? शत्रुञ्जये च कस्य न ? यदेतावान् भेद इति व्यक्त्या प्रसाद्यमिति प्रश्नोऽत्रोत्तरम्—अष्टापदपर्वते भरतचक्रवर्तिकारितप्रासादादीनां स्थानस्य निरपायत्वाद्देवादिसान्निध्यात् "केवइयं पुण कालं आययणं अवसज्झिस्सइ ? ततो तेण अमच्चेण भणियं—जाव इमा उसप्पिणि त्ति मे केवलिजिणाण अंतिए सुयं" इत्यादिवसुदेवहिण्ड्यक्षरसद्भावाच्चाद्ययावदवस्थानं युक्तिमदेव । शत्रुञ्जये तु स्थानस्य सापायत्वात्तथाविधदेवादिसांनिध्याभावाच्च भरतकारितप्रासादादीनामद्ययावदवस्थानाभाव इति सम्भाव्यते । तत्त्वं तु तत्त्वविद्वेद्यमिति ॥ ३ ॥

॥ इति श्रीसकलसूरिपुरन्दरपरमगुरुतपागच्छाधिराजभट्टारकश्री ५ श्रीहीरविजयसूरिप्रसादीकृतप्रश्नोत्तरसमुच्चये तच्छिष्यपण्डितकीर्तिविजयगणिसमुच्चिते चतुर्थः प्रकाशः ॥ ४ ॥

## परम्पराप्रामाण्यविचारः ।

श्रीसूरिपरम्परागतं इदममुकेनाचार्येणाऽमुष्मिन् वर्षे प्रवर्तितमिति सिद्धान्ते प्रकरणे सूरिपरंपरायां च काप्यश्रूयमाणं सर्वमारात्रिकश्रावकप्रतिक्रमणसूत्रादि सिद्धान्तेऽनुपलभ्यमानमप्यव्यवच्छिन्नसूरिपरम्पराऽऽयातत्वात्प्रमाणीकर्त्तव्यम्—"आयरिअपरंपरएण आगयं जो अ आणुपुव्वीए। कोवेइ छेयवाई, जमालिनासं स नासिही ॥" इति श्रीभद्रबाहुकृतसूत्रकृतांगाध्ययन १२ निर्युक्तिप्रामाण्यात्। आवश्यकादयो ग्रन्थाः श्रीभद्रबाह्वादिभिरेव कृता नान्यैरित्यादिपरम्परावत्संविग्नपरम्परागतं सर्वं प्रमाणितव्यम् ॥ इति परम्पराप्रामाण्यविचारः ॥

## सूत्रादर्थो बलीयानिति विचारः ।

कश्चिदर्थात् सूत्रस्य बलवत्त्वं प्रतिपद्यते तन्न युक्तम्, तथाहि—"तित्थयरत्थाणं खलु, अत्थो सुत्तं तु गणहरत्थाणं। अत्थेण य वंजिज्जइ, सुत्तं तम्हा उ सो बलवं ॥" व्यवहारभाष्य ४ उद्देशे। "सुत्तइत्ताओ अत्थइत्तो महिड्ढीओ" व्यवहारचूर्णौ। "अधिरायत्थाणीओ तित्थयरो, अत्थमंडलीए उवविट्ठो आयरिओ तित्थयरत्थाणीओ, एवं अत्थवायगो बलिओ" व्यवहारचूर्णि ६ उद्देशे।

गथा—"जं जह सुत्ते भणिअं, तहेव तं जइ विआलणा नत्थि । किं कालिआणुयोगो, दिट्ठो दिट्ठिप्पहाणेहिं ॥" व्यवहारभाष्य ९-उद्देशे । इयं च गाथा निशीथ १६ उद्देशस्य चूर्णावपि उक्ततया कथितास्ति, तथा—"पासुत्तसमं सुत्तं अत्थेणावोहिअं न तं जाणे । हेस्सरिणेण तेणं, अत्था संघाइआ वहवे ॥" कल्पभाष्यपीठे । तथा—"सुत्तं पमाणं जइ इच्छिअं ते, ण सुत्तमत्थं अतिरिच्च जाई । अत्थो जहा पस्सइ भूअमत्थं, तं सुत्तकारीहिं तहा निवद्धं ॥" यदि 'ते' तव सूत्रं प्रमाणत्वेन 'इष्टं' अनुमतं तत इदमक्षिणी निमील्य विचारयतु देवानांप्रियः—सूत्रं तावत् 'अर्थं' व्याख्यानमतिरिच्य 'न याति' न प्रवर्तते नाववुध्यत इत्यर्थः । अत एव 'अर्थः' निर्युक्तिभाष्यादिरूपः 'यथा' येन प्रकारेण 'भूतं' सद्भूतं 'अर्थं' अभिधेयं पश्यति 'सूत्रकारिभिः' अपि गणधरस्थविरैः 'तत्' सूत्रं 'तथा' तेनैवाभिप्रायेण निवद्धमवसातव्यमित्यादि । अपि च—"उस्सग्गओ नेव सुअं पमाणं, ण वाऽपमाणं कुसला वयंति । अंधो व पंगु वहए स चावी, कहेइ दोण्हं पि हियाय पंथं ॥" 'उत्सर्गतः' सामान्येन 'श्रुतं' सूत्रं नैव प्रमाणं न वाऽप्रमाणं किन्तु पूर्वापराऽविरुद्धवृद्धसंप्रदायागतेनार्थेन प्रमाणम्, अन्यथा पुनरप्रमाणमित्येवं 'कुशलाः' तीर्थकरगणधरा वदन्ति, तथाहि—यथा किल कश्चिदन्धो देशान्तरं गन्तुमनाः स्वयं मार्गमपश्यन् 'पङ्गुं' गन्तुमशक्तं चक्षुष्मत्तया स्कन्धे विन्यस्य वहति, स चापि पंगुः 'द्वयोः' अप्यात्मनस्तस्य च 'हिताय' गर्त्ताप्रपाताद्युपद्रवरक्षणाय 'पन्थानं' मार्गं कथयति, एवमर्थेनाप्रतिवोधितं सदन्धस्थानीयं सूत्रम् । तच यथा पङ्गुस्थानीयमर्थमात्मन उपरिकृतं वहति तदा सोऽप्यर्थः सूत्रनिश्रया गच्छन् सम्यग्विषयविभागदर्शितया निष्प्रत्यपायं मुक्तिमार्गमुपदिशतीत्यतोऽर्थसव्यपेक्षमेव सूत्रं प्रमाणमिति स्थितम् कल्पवृत्तितृतीयखण्डे । "सुत्तस्स मग्गेण चरिज्ज भिक्खू, सुत्तस्स अत्थो जह आणवेइ ।" इति दशवैकालिकचूलायाम् । "किंवहुना सर्वत्रैव सूत्रस्य मार्गेण चरेद्भिक्षुः, आगमादे-

१ प्रसुप्तसमं इत्यर्थः ।

शेन वर्तेतेति भावः । तत्रापि नौघत एव यथाश्रुतग्राही स्यात्, अपि तु सूत्रस्यार्थः पूर्वापराविरोधितत्रयुक्तिघटितः पारमार्थिकोत्सर्गाप-वादगर्भो यथा 'आज्ञापयति' नियुङ्क्ते तथा वर्तेत नान्यथा।" दशवैकालिकवृत्तौ। "अपरिच्छिअसुअनिहसस्स केवलमभिन्नसुत्तचारिस्स । सव्वुज्जमेण वि कयं, अन्नाणतवे बहुं पडइ ॥" उपदेशमालायाम् । अत्र व्यवहारकल्पभाष्ययोर्दशवैकालिकचूलायामुपदेशमालायां च सूत्रस्यार्थपरवशिता दर्शिता । अतः सूत्रादर्थो बलवान्, अर्थश्च निर्युक्त्यादिरूपो ज्ञेयः । यदुक्तम्—"निक्खोभा निक्कंपा सुत्तत्था" समवायाङ्गसूत्रे । 'निःक्षोभौ' वादिना क्षोभयितुं चालयितुमशक्यत्वात् 'निष्कम्पौ' स्वरूपतोऽपीषद्व्यभिचारलक्षणकम्पाभावात्, कौ ? इत्याह—'सूत्रार्थौ' सूत्रं चार्थश्च निर्युक्तिभाष्यसंग्रहणिवृत्तिचूर्णिपञ्जिकादिरूप इति सूत्रार्थौ ॥" समवायाङ्गवृत्तौ सूत्रकृताङ्गवर्णने ॥ तथा—"अत्थो जहा पस्सइ भूअमत्थं" कल्पभाष्ये । "अर्थो निर्युक्तिभाष्यादिरूपः" इत्यादि कल्पवृत्तितृतीयखण्डे । इति सूत्रादर्थो-वलीयानिति विचारः ॥

## आचीर्णप्रामाण्यविचारः ॥

"सो पुण पंच विअप्पो, आगम १ सुअ २ आण ३ धारणा ४ जीए ५ ॥" व्यवहारभाष्य १० उद्देशे । जीतमिति कोऽर्थः ?—"जं बहूहिं गीअत्थेहिं आइण्णं तं जीतं उचितमाचिन्नमित्यर्थान्तरम्" व्यवहारपीठिकाचूर्णौ । "जीतं नाम प्रभूतानेकगीतार्थकृता मर्यादा तत्प्रतिपादको ग्रन्थोऽप्युपचाराज्जीतम् ।" व्यवहारपीठिकावृत्तौ । अतः पञ्चमं जीतव्यवहारमभिमन्यमानैः सर्वमशठाचीर्णं प्रमाणी-कार्यम् । ननु यद्याचार्यपरम्परागतमाचीर्णं सर्वं प्रमाणीक्रियते तदा पार्श्वस्थयथाछन्दादिप्रवर्तितमपि कस्मान्न प्रमाणम् ? उच्यते—

१ व्यवहार इत्यर्थः । २ प्रकार इत्यर्थः ।

आचरणलक्षणाभावात् । आचरितलक्षणं चेदम्—"असढेण समाइण्णं, जं कत्थइ केणई असावज्जं । न निवारिअमन्नेहिं, बहुमणुमयमेअमायरिअं ॥ १ ॥" इति कल्पभाष्ये ॥ 'अशठेन' रागद्वेषरहितेन कालिकाचार्यादिवत्प्रमाणस्थेन सता 'समाचीर्णम्' आचरितं 'यद्' भाद्रपदशुक्लचतुर्थीपर्ववत् 'कुत्रचित्' द्रव्यक्षेत्रकालादौ कारणे पुष्टालम्बने 'असावद्यं' प्रकृत्या मूलोत्तरगुणाराधनाया अबाधकं 'न य' नैव निवारितं 'अन्यैः' तथाविधैरेव तत्कालवर्तिभिर्गीतार्थैः, अपि तु 'बहु' यथाभवत्येवमनुमतमेतदाचीर्णमुच्यते । कल्पवृत्तितृतीयखण्डे । "असढेण" इति गाथा च भगवती प्रथमशतकतृतीयोद्देशकवृत्तावपि विविधसामाचारीप्रामाण्यविषये आचरितलक्षणत्वेन भणिताऽस्ति । स्थानाङ्ग ५ अध्ययन २ उद्देशवृत्तावपि च ॥ तथा—"जं जीअं सावज्जं, न तेण जीएण होइ ववहारो । जं जीअमसावज्जं, तेण उ जीएण होइ ववहारो ॥" व्यवहारभाष्य १० उद्देशे । ननु प्रायश्चित्तयोगविधिविषयमाचीर्णं मन्यामहे नान्यद्, इति चेत्, न, सर्वस्याप्याचीर्णस्य प्रमाणत्वेन सदृशत्वात् । अत्र कश्चिदन्यः प्राह—ननु "तित्थयरवयणकरणे, आयरिआणं पए कयं होई ।" इत्योघनिर्युक्तिवचनात् सूत्रोक्तमेव मन्यामहे न तु पूर्वसूर्याचीर्णमिति तदयुक्ततरम्, यतो यदशठाचीर्णमसावद्यं तज्जिनोक्तमेव, तथाहि—"धीरपुरिसपन्नत्तो, पंचमओ आगमो विउपसत्थो । पियधम्मऽवज्जभीरूपुरिसजायाणुचिन्नो य ॥" व्यवहारभाष्ये । "धीरपुरिसा—तित्थगरा तेहिं पन्नत्तो त्ति निउणो—चउद्दसपुव्विणो तेहिं कालं पडुच्च पसंसिओ—न निंदिओ, पियधम्माईहिं अचिन्नो तेण पञ्चओ भवइ सच्चमेतदिति । 'बहुसो बहुस्सुएहिं, जो वुत्तो न य निवारिओ होइ । वत्तणुवत्तपमाणं, जीएण कयं हवइ एअं ॥' यदनृतं स्यात् बहुसो बहुस्सुएहिं वारिओ हुंतो जम्हा न निवारिओ तम्हा सद्दहिअव्वं सत्यमेतदिति । व्यवहारभाष्यचूर्णि १० उद्देशे । किञ्च—"अशठाचार्याचीर्णोऽमानने पंचविहायारायरणसीलस्स गुरुणो हिओवएसवयणं आणा, तमन्नहा आयरंतेण गणिपिडगं विराहिअं भवइ

त्ति" नन्दिचूर्णौ । "को कत्ता सत्थाणं ? तित्थकरो, तित्थकरेण कयं न को विज्जइ त्ति वुत्तं भवइ । एवं सो गीअत्थो कत्ता विहीए करिंतो अकोप्पो भवइ, कत्ता इव तीर्थंकर इवेत्यर्थः ॥" निशीथचूर्णि १६ उद्देशे ॥ इत्यादीन्यनेकानि सिद्धान्तवचनान्यवहीलितानि तेषां भवेयुः । अथवा ये आचीर्णं न मन्यन्ते तैः प्रतिक्रमणे प्रतिक्रमणसूत्रभणनानन्तरं अन्त्यसाधुद्वयवर्जं सर्वेषां साधूनां क्षमणकं करणीयं न त्वात्मतृतीयस्यैव गुरोस्तस्याचीर्णत्वात्, यदुक्तं कल्पभाष्ये—"जा दुचरिमो त्ति ता होइ वंदणं तीरिए पडिक्कमणे । आइण्णं पुण तिण्हं, गुरुस्स दोण्हं च देवसिए ॥" 'प्रतिक्रमणे' प्रतिक्रमणसूत्रे 'तीरिते' पारं प्रापिते सति वन्दनं भवति 'यावद्विचरमः' साधुः द्वौ साधू अवशिष्यमाणौ यावत्सर्वेषामपि क्षमणकं कर्त्तव्यमिति भावः । एष विधिः पूर्वं चतुर्दशपूर्वधरदशपूर्वधरादिकाले आसीत् संप्रति पुनः पूर्वाचार्यैराचीर्णमिदं त्रयाणां साधूनां वन्दनकं कर्तव्यम् । तत्रैकस्य गुरोर्द्वयोः साध्वोः पर्यायज्येष्ठयोर्दैवसिके, उपलक्षणत्वाद्रात्रिके चावश्यकेऽयं विधिरवगन्तव्यः। पाक्षिके तु पञ्चसाधवो वन्दित्वा क्षमयितव्याः, चातुर्मासिके सांवत्सरिके च सप्त । आह चावश्यकचूर्णिकृत्—"पक्खिए पंच अवस्सं, चउमासिए संवत्सरे अ सत्त अवस्सं ति ।" आह किमत्र कारणं मौलं विधिमुल्लङ्घ्य पूर्वसूरय इत्थमभिनवां सामाचारीं स्थापयन्ति ? इति, उच्यते—"धिइसंघयणाईणं, मेरा हाणिं च जाणिउं थेरा । सेहअगीअट्ठा च्चिअ, ठवणा आइण्णकप्पस्स ॥" धृतिर्मानसावष्टम्भरूपा इत्यादि कल्पवृत्तितृतीयखण्डे । नन्वावश्यकचूर्ण्यादिवचनादनाचीर्णतयाऽऽत्मना तृतीयस्य गुरोः क्षमणकं क्रियत इति चेत्, न, अनाचीर्णताया अभावात् कल्पभाष्यात्पश्चाद्भावित्वेन चूर्णिष्वाचीर्णस्यैवोक्तत्वात्। ननु वपुरशक्त्यादिनाऽधुना सर्वसाधूनां क्षमणकं कर्तुं न शक्यत इति चेत्, तर्हि पर्वणि सर्वसाधूनां वन्दनकान्यपि न दाप्यानि शक्त्याद्यभावस्य

गुरुत्वात्, सिद्धान्तोक्तत्वादाप्यन्त इति चेन्, तन् क्षमणकमपि सिद्धान्तोक्तत्वात्किं न स्यात् ? अशठाचीर्णस्य तु प्रामाण्याङ्गीकारे सर्वं सुस्थं स्यात् । इत्याचीर्णप्रामाण्यविचारः ॥

## नमस्कारे 'हवइ' पदप्रामाण्यविचारः ॥

नमस्कारे आद्यपञ्चपदैः सह संलग्ना 'एसो पंच' इति गाथाऽपरसिद्धान्ते क्वापि न दृश्यते, यत्र तु संपूर्णो नमस्कारो दृश्यते तद् महानिशीथं न मन्यते भवद्भिः; महानिशीथे हि 'हवइ' इत्युक्तमस्ति । भगवत्यां तु पञ्चैवाद्यपदानि 'नमो बंभीए लिवीए' इत्यन्तान्युक्तानि सन्ति न तु संपूर्णः, 'लोए' इत्यपि च पदं भगवत्यां सर्वत्र न दृश्यते । आवश्यकचूर्णौ त्वेवमुक्तमस्ति–"सो पुण नमुक्कारो कति पयाणि ? छ वा दस वा । तत्थ छप्पयाणि–नमो अरहंताणं सिद्धाणं आयरियाणं उवज्झायाणं सव्वसाहूणं एते छप्पया । इमाणि दसपयाणि–नमो अरिहंताणं नमो सिद्धाणं एवं दस" इति । आवश्यके पुनः "अरिहंतनमुक्कारो जीवं मोएइ" इत्यादिभिः २१ गाथाभिर्यथा पद्धोऽस्ति तथा न स्मर्यते भवद्भिः । ननु 'एसो पंच' इति गाथाऽऽवश्यके समस्तीति चेत् उच्यते, सत्यं समस्ति परमियं गाथा आद्यपञ्चपदैः सह संलग्नतया यथा पठ्यते तथा नास्तीति ब्रूमः । माहात्म्यप्रकाशकत्वात्पाठेऽपि २१ गाथामध्यादपरा अपि द्वित्राः पाठ्याः स्युस्ते लेपैव । ननु परम्परायातत्वात्पञ्चपदान्ते 'एसो पंच' इति गाथा पठ्यते इति चेत्, तर्हि सिद्धान्तोक्तत्वं न भाषणीयम् । ननु 'हवइ मंगलं' इति पाठे छन्दोभङ्गः स्यादिति चेन्, न, "जहा दुमस्स पुप्फस्स भमरो आवियइ रसं ॥" "अहं च भोगरायस्स तं च सि अंधगवण्हिणो ॥" "जहा से कंबोआणं आइन्ने कंथए सिया । आसे जवेण पवरे एवं हवइ बहुस्सुए" ॥ इत्याद्यनेकस्थानेषु सिद्धान्ते नवाक्षरै-

कपादानां छन्दसां भूयसां दर्शनात्। अतः सिद्धान्तोक्तं संपूर्णं नमस्कारं मन्वानैः 'हवइ' इत्यपि माननीयम्। इति नमस्कारे 'हवइ' पदविचारः ॥

## पानीयमाश्रित्य षडाकारविचारः ॥

ननु श्राद्धस्य द्व्यासनादौ प्रत्याख्याने क्रियमाणे सिद्धान्तोक्ताः 'पाणस्स लेवेण वा' इत्यादिकाः षट् पानकाकाराः किं नोच्यन्ते ? इति चेत् उच्यते—"जइ तिविहस्स पच्चक्खाइ तो पाणस्स छ आगारा हवंति" इत्यावश्यकचूर्णौ त्रिविधाहारप्रत्याख्यान एव पानकाकारा उक्ताः सन्ति, न तु द्विविधाहारे, नाऽप्येकासनादौ चतुर्विधाहारप्रत्याख्याने; तेन ते द्विविधाहारे नोच्यन्ते, द्विविधाहारस्य सिद्धान्तेऽभणनादेव। अथ त्रिविधाहारे किं नोच्चार्यन्ते ? उच्यते तत्र नोच्चार्यन्त इति न वयं ब्रूमः। प्रासुकजलपायिनो द्व्यासनादौ त्रिविधाहारे किं नोच्चार्यन्ते ? इति चेत् उच्यते—तत्रापि ते नोच्चार्यन्त इति न वयं ब्रूमः, किन्तु यः श्राद्धो भोजने तदुत्तरकालं च स्वच्छमप्रासुकं जलं नित्यं पिवति न तु तन्दुलोदकानि तस्य ते पानकाकारा उच्चार्यमाणा न विशेषोपयोगिनो भवन्तीतिकृत्वा नोच्चार्यन्ते। अथ जलान्तसिक्थपाते तत्पाने च तस्य प्रत्याख्याने भङ्गः किं न स्यात् ? इति चेत्, न, ससिक्थजलस्य ज्ञात्वा कदापि तेनाऽपानात्, अपरजलाऽप्राप्तौ तु गालितस्यैव तस्य जलस्य ग्रहणाच्च। ननु तर्हि द्विविधाहारे प्रासुकाम्भःपायिनः कुतस्ते उच्चार्यन्तेऽनुक्तेन ? इति चेत् उच्यते—पूर्वाचार्यपरम्परातः। इदमत्र तत्त्वम्—यो हि द्विविधत्रिविधाहारयोः प्रासुकमेव जलं पिबति तस्य धावनादिजलपानस्यापि संभवात् पानकाकाराः साधुप्रत्याख्यान इवोपकारिण एव स्युरिति तस्य प्रत्याख्याने ते प्रोच्यन्ते नान्यस्येति ॥ इति श्रीगुणरत्नसूरिकृतवासोन्तकप्रकरणे ॥

## हमारां प्रकाशनो—

| | | आ. पा. |
|---|---|---|
| १ | श्रीअक्षयनिधितपोमाहात्म्य | भेट× |
| २ | हेमचन्द्रकृति कुसुमावली | १—०—० |
| ३ | श्रीजिनचन्द्रसुधास्यंदिनी | भेट |
| ४ | श्रीबृहद्‌योगविधि | " |
| ५ | श्रीजिनचन्द्रकान्तसुधास्यंदिनी | " |
| ६ | श्रीवर्द्धमानतपोमाहात्म्य | ३—०—० |
| ७ | श्रीपञ्चप्रतिक्रमणसूत्राणि विधिसह (कमीशन वगर) | १—२—० |
| ८ | श्रीसिद्धहेमचन्द्र शब्दानुशासनम् ( आनंद-बोधिनी टीका ) भा. १ | ३०-०-० |
| ९ | श्रीसिरिवालचरित्तम् | ३—०—० |
| १० | श्रीताम्रपत्रारूढसिरिवालचरित्तं ( फक्त एकज नकलना ) | २५०१-०-० |
| ११ | श्रीपञ्चाशकशास्त्रसारांश वि. १ | ३—०—० |

| | | रु. आ. पा. |
|---|---|---|
| १२ | श्रीआनन्दचन्द्रसुधासिन्धु वि. १ | ४—०—० |
| १३ | श्रीआनन्दचन्द्र सुधासिन्धु वि. २ | ३—०—० |
| १४ | श्रीभगवतीसूत्रनां शास्त्र-प्रस्तावनाथी शरू १०८ व्याख्यानो | ८-१२-० |
| १५ | श्रीज्ञातासूत्रसटीक भा. १ सारांशसह. | ८—०—० |
| १६ | श्रीआगमोद्धारक | २—०—० |
| १७ | श्रीज्ञातासूत्रसटीक सारांशसह. द्वि. विभाग प्रेसमां | ७—०—० |
| १८ | सिद्धहेमचन्द्रशब्दानुशासनम् वि. २ | " |
| १९ | सूत्रकृतांगसूत्रसटीक भाग २ | " |
| २० | श्रीसूत्रकृताङ्गसारांश | " |

**श्रीसिद्धचक्र-साहित्य-समिति**
C/o संघवी चीमनलाल सवाइचंद
गलेमंदी, गोलशेरी-सुरत.